# "वर्तमान सन्दर्भे उपनिषत्कालीन-नारीणाम् समीक्षात्मकम् अध्ययनम्"

गुरुकुल कांगड़ी विश्वविद्यालयस्य
संस्कृत विभागे
पी-एच० डी० शोधोपाध्यर्थं
प्रस्तुतः

## शोध-प्रबन्धस्य सारः

निर्देशकः
आचार्यः वेदप्रकाशः शास्त्री
संस्कृत विभागाध्यक्षः
आचार्योपकुलपतिश्च

शोधकर्त्री
श्रीमती दर्शजा देवी


संस्कृत - विभागः
गुरुकुल कांगड़ी विश्वविद्यालयः
हरिद्वारम्

दिसम्बर 2002

# "वर्तमान सन्दर्भे उपनिषत्कालीन-नारीणाम् समीक्षात्मकम् अध्ययनम्"

गुरुकुल कांगड़ी विश्वविद्यालयस्य

संस्कृत विभागे

पी-एच० डी० शोधोपाध्यर्थं

प्रस्तुतः

## शोध-प्रबन्धस्य सारः

निर्देशकः

आचार्यः वेदप्रकाशः शास्त्री

संस्कृत विभागाध्यक्षः

आचार्योपकुलपतिश्च

शोधकर्त्री

श्रीमती दर्शना देवी



संस्कृत - विभागः

गुरुकुल कांगड़ी विश्वविद्यालयः

हरिद्वारम्

दिसम्बर 2002

## वर्तमान सन्दर्भे उपनिषत्कालीन नारीणाम् समीक्षात्मकम् अध्ययनम्

## सारसंक्षेपिका

### प्रथमोऽध्यायः – वेदानां महत्त्वम्

वेद्यन्ते ज्ञाप्यन्ते धमार्थकाममोक्षाः अनेनेति व्युत्पत्या निष्पत्रः चतुर्वर्गज्ञानसाधन–भूतोवेदोनाम। अपौरुषेयं वाक्यं वेदः सायणाचार्यः इष्टप्राप्ति– अनिष्टपरिहारयोर लौकिकमुपायं यो वेदयति वेदः। नूनं

ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ।।

किञ्चलक्षणप्रमाणाभ्यां वस्तुसिद्धिः नहि प्रतिज्ञामात्रेणेति न्यायविदां मतम्। तत्किं नाम वेदलक्षणमित्युच्यते – "प्रत्यक्षानुमानागमेषु प्रमाण विशेष्वन्तिमोवेदः" इतिचेत्र। मन्वादिस्मृतिष्वतिव्याप्तेः। मन्वादिस्मृतीनामपिवेदत्वमापद्यते ।

"समय वलेन सम्यम् परोक्षानुभव साधनंवेदः इत्यपिनयुक्तम् ; एतदागम लक्षणस्यापि स्मृतिग्रन्थेषु सद्भावात्। अस्तु तावत् "अपौरुषेयत्वे सति सम्यक् परोक्षानुभवसाधनं वेदः" इतिचेदव्याप्तेः। वेदस्यापि परमेश्वर निर्मितत्वेन पौरुषेयत्वम्। शरीरधारिजीव निर्तित्वाऽभावात् अपौरुषेयत्वमितिचेत् तदपिन। सहस्त्रशीर्षाः पुरुषः सहस्त्राक्षः सहस्त्रपात् "इत्यादि श्रुतिभ्झिरीश्वरस्यापि शरीरीत्वात्। ननु " कर्मफल रूप शरीरधारिजीव निर्मितत्वाऽभावमात्रेणाऽपौरुषेयत्वमितिचेत्तदपिन। जीव विशैषैः अग्नि वाय्वादित्यैः वेदानामुत्पादितत्वात्, ऋग्वेदोऽग्नेरजायत, यजुर्वेदोवायोः सामवेदः आदित्यात्। उक्तमपि–

"अग्नि वयुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।
दुदोह यज्ञ सिध्यर्थमृग्यजुः सामलक्षणम् ।।

## द्वितीयोऽध्यायः – वेदेषु नारी

मनुस्मृति आदि स्मृति ग्रन्थेभ्यः पूर्वं वेदेषु नारीणां स्वरूपं विस्तरेण निर्दिष्टम् अस्ति। वैदिक ऋषि नारी महिम्नी कथयति "स्त्री हि ब्रह्मा बभूविथ अर्थात् नारी साक्षात् ब्रह्मा अस्ति। यथा प्रजापतिः सृष्टिं विरचयति तथैव नारी सन्तानोत्पत्तिं कृत्वा सृष्टिप्रक्रियां वर्धयति। महर्षि दयानन्द सरस्वती स्वकीय सत्यार्थ प्रकाश नाम्नी अमर ग्रन्थे शिक्षा विषये प्रोक्तवान् . . .'मातृमान पितृमान् आचार्यवान् पुरुषोवेद।" मातृमान् शब्दस्य व्याख्यानं कुर्वन्तः ऋषिवर्याः पुनरपि सः मातृमान् कथतवन्तः . . प्रशस्तां धार्मिकी माता यस्य स एव मातृमान् भवति यस्य जननी प्रशंसनीय गुणैर्युक्ता धार्मिक विचारोपेता च भवति। पाणिनीय समास प्रकरणे यानि सुभाषिणि सन्ति, तेष्वपि पुरुषापेक्षया नारीणां महत्ता उद्घोषिता अस्ति। साधूक्तं केनापि . . . न गृहम् गृहमित्याहुः गृहिणी गृहम् उच्यते।

वेदेषु नर–नारी उभावपि जीवन रथस्य चक्ररूपौ। यथा– रथम् एकेन चक्रेण चलितुम् न शक्नोति तथैव केवलेन पुरुषेण नारीणावा जीवन रथमपि चलितुम् नैव शक्नोति। एतौ क्वचित् भ्राताभगिनि रूपेण, क्वचित् माता–पुत्र रूपेण, क्वचित् पति पत्नी रूपेण, क्वचित् आचार्य–आचार्या रूपेण, क्वचित् च प्रचारक–प्रचारिका रूपेण समाजे स्वं स्वं कार्यं कुर्वाणाः विलोक्यन्ते।

वेदानुसारम् पुरुषः द्युलोकः नारी च पृथ्वीरूपाः, उभयोः समन्वयेन सौरजगत् प्राणवान् भवति। पुरुषः सामरूपः नारी च ऋक् रूपा, द्वयोः सामञ्जस्येन सृष्टौ सामगानम् भवति। पुरुषः वीणा दण्डः नारी च वीणा तन्त्री, उभयोः सामञ्जस्येनैव जीवने संगीत झंकृतिः भवति। पुरुषः सरितायाः एवं तटं नारी च द्वितीयम् तत्, उभयोः मध्ये सामाजिक विकासस्य धारा प्रवहति। पुरुषः दिवसरूपः, नारी रात्री रूपा, पुरुषः प्रभातं, नारी च उषा, पुरुषःमेधः, नारी व विद्युत्, पुरुषः अग्नि, नारी च ज्वाला, पुरुषः आदित्यः नारी च प्रभा, पुरुषः तरुः नारी च लता, पुरुषः धर्मः, नारी च धीरता, पुरुषः सत्यम् नारी

च श्रद्धा, पुरुषः कर्म, नारी च विद्या, पुरुषः सत्वम् नारी च सेवा, पुरुष अभिमानः नारी च क्षमा, द्वयोः सामञ्जस्ये समाजस्य, देशस्य, विश्वस्य पूर्णता भवति। नारीं बिना नरः अपूर्णः, वेदेषु नारी जीवनस्य यथा मुक्त कण्ठेन प्रशंसा वर्तते तथा अन्यत्र कुत्रापि भवितुं नार्हति। वेदे भार्या पत्युः समा। द्वयोः अनयोः न कोऽपि निकृष्टः न कोऽपि श्रेष्ठः। द्वयो स्थानं समम् अस्ति। वेदे उभयोः कृते, दम्पती च शब्दस्य प्रयोगः। दमशब्दस्य अर्थः गृहम् पति शब्दस्य अर्थः स्वामी। उभौ मिलित्वा गृहस्य रक्षणं संञ्चालनं वा कुरुतः। वेदानुसारम् वधु पतिगृहे दासी भूत्वा नायाति अपितु साम्राज्ञी भूत्वा आयाति। सा केवलं पति दृष्टौ साम्राज्ञी नास्ति अपितु श्वश्रुश्वसुर, देव, ननन्द सर्वेषाम् दृष्टौ साम्राज्ञी भवति।

पतिः तस्याः सुखस्य चिन्तां करोति, स च तां प्रति स्वकीयं दायित्वं मन्य मानः तां कथयति – त्वं मया सह निवसन्ती सन्तान सुखं धन सुखं च सर्वदैव प्राप्स्यसि। त्वं मम् आयोः अपहरणं मा कुर्याः, अहम् च तव आयोः अपहरणं न करिष्ये। त्वं गृह्याश्रमं पूर्णतां प्रदेहि। अस्मिन् गृहस्थाश्रमे यत्र कुत्र छिद्रोत्पत्तिः भवेत् त्वम् तानि छिद्रानि अपाकुरू, अविचला च भव। नवोढां प्रति आशिः प्रयच्छन् वेदः कथयति – सा नारी मंगलमयी सुखमयी भवन्ती प्रतिगृहे विशिष्टां कान्तिं प्राप्नुयात। वेदे नारी आत्मानम् अधिकृत्य यद् ब्रवीति तस्य वचनेषु दैन्यम् नास्ति, अपितु सा गृहस्थाश्रमस्य केतुम् स्वहस्ते धारयित्वा शत्रुन् पराजयित्री विरांगना अस्ति।

वेदाध्ययन काले इदं वैशिष्टयेन ध्यातव्यम् यत् वेद मन्त्रेषु पृथ्वी, उषा, नदी तथा च गौ। वाचकानि यानि नामानि सन्ति, तानि। नामानि नार्याः उच्चतां, विविध गुण गौरवं च प्रकाशयन्ति। यथा – पृथ्वी वाचक नामसु गौ, क्षमा, क्षिति, अवनी, उर्वी, मही, नामानि नारी वाचकानि सन्ति, तथापि एतेषु शब्देषु तथा गमनशीलता, क्षमाशीलता, निवासक शक्तिः रक्षकशक्तिः विशालता, पूज्यता च अपि सूच्यते। उषा वाचि नामसु विभावरी, सूनरी, चित्रामधा, अर्जुनी, वाजिनी, सुमानवरी तथा च सुनृता नामानि नारी वाचकानि सन्ति सहैव च तस्याः ज्ञान ज्योतिर्मयतां, शुभ्र नेतृत्व क्षमताम्, अद्भुत् ऐश्वर्य शालीनताम, सत्वगुणप्रधानताम्, बलवत्ताम्, सुखदायकताम्, सत्यमधुरभाषिताम् चापि प्रतिपादयन्ति।

नदी वाचक नामसु श्रोत्या, एनि, धुनि, रुझाना सरित, हरित, अथ हिरण्यवर्णाः पयस्वती, सरस्वती, तरस्वती, नामानि तस्याः नार्याः वाचकानि सन्ति, सहैव च तस्याः देव्याः श्रेष्ठ कुले उत्पत्तिं गतिमत्ताम्, शत्रु प्रकम्पताम्, विघ्नभञ्जकताम्, निरन्तर प्रवहनशीलताम्, दोषहरणशीलताम् अग्रगामितां, ज्योतिर्मयतां विविध विद्या रसमयतां, वेदशालीतां मातृत्व महिमानं चापि सूचयन्ति।

गौ वाचि नामसु अध्न्या, उस्रिया, मही, अदिति, इडा, जगती, शक्वरी, नामानि, यद्यपि नारी वाचकान्यपि सन्ति परंतानि अपीडनीयताम्, ऐश्वर्य प्रवाहकतां, पूज्यताम्, अपराजेयताम्, समानार्हतां, स्तोतव्यताम्, जंगमशीलतां, सामर्थ्यशीलतां च द्योतयन्ति।

## यज्ञे नारीणाम् अधिकारः

वेदानुसारं नारीणां यज्ञ करणे पूर्णाधिकारो वर्तते। मध्ययुगे बहवः पण्डिता वेदस्य वास्तविकमर्थम् यथातथ्येन अजानन्तः वेदाध्ययनात्, यज्ञादि कर्मकरणात् च नारी जातिम् वञ्चिताम् अकुर्वन्। मुनि याज्ञवल्क्यः स्पष्टमेव कथितवान् – पत्नीं विना पुरुषः यज्ञं कर्तुम् असमर्थः। मनुस्मृतौ अनेके श्लोकाः परवर्ती विद्वद्भिः प्रक्षिप्ताः सन्ति। ते मनुना न विरचिता, अपितु स्वार्थ परायणैः पण्डितैः स्वकीयम् स्वार्थं साधयितुं मनुस्मृतौ तेषां श्लोकानां प्रक्षेपणं कृतम्। एतेषु पद्येषु प्रतिपादितम् अस्ति । यज्ञे कन्या युवती वा होता रूपेण सम्मिलिता भवतुं न अर्हति।

## तृतीयोऽध्यायः – उपनिषदः

अस्ति खलु विदितमेवैतद्विदुषां यच्चतुर्वर्गफलप्राप्त्यर्थ हि मानवं जन्म। चतुर्वर्गस्तु वेदादिसच्छास्त्रविश्रुतो धर्मार्थकाममोक्षलक्षणः। विद्यैकसचिवकर्मपरिशीलनफलकर्वराग्य वैशद्यनिष्पाद्यश्च तदधिगम इति सर्वेऽप्यागमिनः स्वीकुर्वन्ति। विद्या च पुनर्द्विविधा, अपरा परा चेति, यत्रेदमुदाहृतं भवति : –

**"तत्रापरा ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरस,............ परा च सा यया तदक्षरमधिगम्यते** । (मुण्डकोप०)

ऐहिकधर्मार्थकामसाधनार्थपरत्वेनऋग्वेदादयोऽप्रधानवृत्त्या 'अपरेति पदेन, मुखवृत्त्या मोक्षैकसाधनीभूतब्रह्मविद्याधिगमहेतुत्वेन च पुनरुपनिषदः 'परेति पदेन व्यपदिश्यन्तेतरा–मिति व्यक्तमेव विदुषाम्। सेजेगीयते च ब्रह्मविद्येत्यपर संज्ञयापीयमुपनिषद्विद्या। उप–नि–पूर्वकस्य विशरणगत्यवसादनार्थकस्य षट्लृधातोः क्विबन्तरूय रूपमिदमुपनिषत्। उपउपगम्य गुरूमाचार्यमुपलभ्य वा ब्रह्मोपदेशं, तन्निष्ठतया परिशीलयतां दृष्टानुश्रविक विषयवितृष्णानां मुमुक्षुणामविद्यादेः संसार बीजस्य, नि–नितरां निश्शेषेश वा सद्–अवसादयित्री विशरणकर्त्री तद्द्वारा ब्रह्मोपगमयित्री या सोपनिषदिति तद्व्युत्पत्त्यर्थ निबन्धना सती ब्रह्मविद्यापि सा, इति वचोऽपि नितरां रोचिष्णु खलु । न चोपनिषदामेव पराविद्यात्वं कथ? वेदेष्वपि बहुत्र वदुपदेशश्रवणात्तेषामपि पराविद्यात्वं कित्र खलु सोपपत्तिकमिति वाच्यम्, वेदेष्वप्राधान्येन उपनिषत्सु च पुनः प्राधान्येन मुख्यवृत्त्या च तदुपनिबन्धनात्। वेदेषु प्राधान्येनाभ्युदयफलकस्य, कर्मोपासनाविज्ञान साधनस्य, भगवत्परब्रह्मप्रभा प्रत्यायकस्य, धर्मार्थकामरूपत्रिवर्गस्यैवोपदेशः। उपनिषत्सु तु मुख्यवत्त्या ब्रह्मविद्यैकसाधनस्य त्रिविधदुःखविप्रमोक्षस्य मोक्षस्यैवोपदेश इति उपनिषदामेव परा विद्येति पदेन प्राधान्येन व्यपदेशो यौक्तिको न वेदानाम्। एतावता उपनिषदां वैशिष्ट्येन ब्रह्मविद्यात्वं संसाध्यते, न जातु वेदानां तद्वत्त्वं तावता परिबाधयत इत्यवधेयम्।

## उपनिषदांमहत्वम्

> **धर्मार्थ काम मोक्षेषु यस्यैकोऽपि न विद्यते ।**
> **अजागलस्तनस्येव तस्य जन्म निरर्थकम् ।।**

नूनं चतुर्वर्गाणां धमार्थकाममोक्षणां फलप्राप्त्यर्थ हि मानवं जन्म। चतुर्वर्ग फल प्राप्तिस्तु विद्ययैव लब्धु शक्यते। उक्तञ्च –

> **शुनः पुच्छमिव व्यर्थ जीवितं विद्यया बिना ।**
> **धर्मार्थौ न जानाति लोकोऽयं विद्यया बिना ।**
> **तस्मात्सदैव धर्मात्मा विद्याऽऽदान परोभवेत् ।।**

तत्र "द्वे विद्ये वेदितव्ये पराऽपराचेति । तत्राऽपरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः।

परा च साविद्या यया तदक्षरमधिगभ्यते। ऐहिलौकिक धर्मार्थकाम साधनार्थे परत्वेन–ऋग्वेदादयश्चत्वारोऽपिवेदाः अमुख्या वृत्याऽपरा विद्ययोच्यन्ते । मोक्षस्यैक साधनमात्रा ब्रह्मविद्याऽधिगम हेतुत्वेन पुनरूपनिषदः परा विद्यापदेन मुख्यावृत्या व्यपदिश्यन्ते।

उप–नि–पूर्वकात् विशरण–गति–अवसादनार्तिकात् षट्लृघातोः क्विवन्तं रूपमुपनिषत्। उपनिषद् शब्दार्थस्तु उपगम्य गुरुमुपलभ्य वा ब्रह्मोपदेशं संसार बीस्याऽविद्यादेः निशेषेणाऽवसादयित्री ब्रह्मोपगमयित्री च या विद्या सोपनिषद्विद्योच्यते।

## चतुर्थोऽध्यायः – उपनिषद कालीनाः नार्यः

यथा वेदेषु नारीणाम् गौरवास्वादं चारू चरित्रम् अस्माभिः पठ्यते तथैव उपनिषत्सु अपि नारीतत्वम् सर्वत्र परिव्याप्तम् वर्तते। यद्यपि नारी शब्दस्य प्रयोगः बाहुल्येन नास्ति तथापि नारीतत्वं परमेश्वरस्य शक्तिरूपेण मायारूपेणनतेण वा वर्ण्यते। माया, प्रकृति, अजा, इच्छा, ह्र, धीं श्री, आदि अनेकैः शब्दैः उपनिषत्सु तत्वम् इदम् व्याख्यातम्। तत्र नारी कुत्रचिद् अग्नि स्वरूपा कथ्यते, कृत्रापिच उमा आदि नामभिः वणर्यते। नार्यः वास्तविकं स्वरूपं प्रब्रह्मणः परमेश्वरस्य भिन्ना–भिन्नत्मिकाः शक्तिरेव अस्ति। अतएव नर रूपः सर्वाधारः, सर्वशक्तिमान, श्री सर्वेश्वरः तथाच जगत् उत्पत्ति–स्थितिलयकारिणी, नारी रूपा भगवती श्री सर्वेश्वरी अनयोः द्वयोः मनमोहिनी, नित्य विहार विहारिणी, द्वयोः युगलं सर्वदा ध्रुवः धुर्वोऽस्ति। यथा – अनयो द्वयोः एकस्तेजः द्विधा मन्यते, तथैव अनयो अंश रूप लौकिक नारी–नरयोरपि एक तत्वं नामद्वयम् इत्येव कथनीयम्। नारी नरस्य अनुपम सह कारिणी अस्ति। यतोहि नरः जीव रूपेण विचरति। नारी च सहयोगिनी भूत्वा बुद्धि रूपेण सहाय्यम् करोति। यदि नरः दिनो भूत्वा श्रमेण तपस्यति, तर्हि नारी रजनी भूत्वा तस्य श्रमो हरति। यदि नरः मनोभूत्वा संकल्प विकल्प करोति, तर्हि नारी वाणी भूत्वा तस्य समाधानम् करोति। यदि नरः सूर्यरूपो भूत्वा जगत् प्रकाश यति, तर्हि नारी सन्ध्या भूत्वा तस्य अवलम्ब रूपा भवति। यदि नरः इन्द्रो भूत्वा जलं वर्षति, तर्हि नारी पृथ्वी भूत्वा तेन जलेन प्राणीनाम् पोषणम् करोति, नरः यदि दाता तर्हि नारी पालिकाऽस्ति। यदि नरः

नारायणो भूत्वा अगाध जल राशौ शेष शय्यायाम् शेते, तर्हि नारी महालक्ष्मी भूत्वा स्वअद्भुत कौशलेन तामेव सुख शय्यां नारायणस्य चरणौ सेवते। यदि नरः रामो भूत्वा रावणेन सह युद्धं करोति, तर्हि नारी जनकनन्दनी भूत्वा स्व पातिव्त्य तपसा तस्य सहायतां करोति।

नरः यदि क्रोधः, तर्हि नारी शान्ति। नरः यदि नदः नारी नदी अस्ति। नरः यदि भर्त्ता, नारी भार्या अस्ति। नरः यदि गृहपति तर्हि नारी गृहलक्ष्मी अस्ति। नरः यदिवेत्ता, नारी विद्या अस्ति। नरः यदि मायी तर्हि नारी माया अस्ति। नरः यदि बन्धकाः नारी श्रृखंलाऽस्ति। नर यदि मोचकः नारी मुक्ति अस्ति। नरः यदि कर्त्ता तर्हि नारी क्रियाऽस्ति।

यथा – नारी नरयोः संज्ञा अन्पोऽन्पा श्रित्ता अस्ति तथैव नारी नरयोः अंगउपाङ्गौ, आकृति–प्रकृति, कार्य करणं, निवसनं, सहनं, व्यवहार दर्शनं, स्पर्शनं वाग्व्यवहारः सर्वमैव परस्परं सापेक्षम् अस्ति। अनेन प्रकारेण बुद्धिमानजनः सहज रूपेणएव ज्ञातुं शक्नोक्ति यद् नारी नरस्य वामाङ्गी वर्त्तते।

## उमा हेमवती

केनापनिषदीयं कथा वर्त्तते। एकदा देवजनाः स्व–स्व बलेन उन्मत्ताः भूत्वा आत्मानम् एव सर्वशक्ति मन्तं अमन्यन्त। आत्मानम् एव सर्व मेनिरे। तस्मिन् एव समये एकं तृणं तत्र आयातम्। आकाशवाणी च अभवत् यदि युष्मासु कोऽपि शक्तिमान् अस्तितर्हि इमं तृणं अस्मात् स्थानात् अपसारयत। देवाः प्रश्नम् अर्कुवन्–इदं विश्वम् अस्माकम् मनः, प्राणाः, वाणी, चक्षुः श्रोत्रादिकं कः चालयति ? कः ईदृशः देवः यः अस्माकम् इन्द्रियाणि तत् तत् विषयेषु योजयति, जिज्ञासु मुनिः तत्र पृच्द्दति–

**के नो षितंपतति प्रेषितं मनः केन प्राणः प्रथमं प्रयाति युक्तः।**
**कैनेषितां वाचामिमां वदन्ति चक्षुः श्रोत्रंकऊ देवो युनक्ति।।**

केन शब्दः उपनिषदः आर्दो अनेकैः प्रश्नैः सह युक्तोऽस्ति। अत इयम् उपनिषद केनोपनिषद् कथ्यते। ऋषि परम्परायाम् ब्रह्म ज्ञान सम्बन्धीनि या व्याख्या आसीत् सा एव बौद्धव्य। तद् ब्रह्म करणानाम् अपिकरणः मनसो ऽपिमनः प्राणाणामपि प्राणः, नेत्रवताम् अपि नेत्रं, तस्मिन् ज्ञतें सर्व ज्ञातं भवति आत्माच अमरतां प्राप्नोति। तदब्रह्म वाचः मूलं नेत्रमूलं चवर्त्तते। यावत् अस्माकम् वाणी गच्द्तितत सर्वम् ज्ञानागारम् वर्तते। केनोपनिष्द प्रथमखण्डे द्वितीय खण्डे चापि तस्य ब्रह्मणो विवेचनं वर्तते। तद् ब्रह्म अविज्ञेयं, संसारे यानि कानि चित् उत्कृष्ट कार्याणि सन्ति, तैः कार्यैः देवाः आत्मानं विजयी मन्पन्ते। तृतीय खण्ड पर्यन्तं देवानां भ्रान्तयः कथिताः सन्ति। संसारे यत् किञ्चित् उर्जितरूपे दृश्यते तत् सर्वम् देवाः स्वपिजय पक्षे स्थापयन्ति। ब्रह्मणा यद्किञ्चिद् कृतं तत् सर्वम् देवानाम् कृते स्व। इदम् देवाः अबुध्यन्त, देवानां इमां वार्ता ब्रह्म अजानात् तथैव आकाशे एकाशक्तिः उत्पन्नभवत्। देवाताम् शक्तिं ज्ञातुम् असर्मथा अभवन्। तया स्व परिचयः प्रदत्तः। अहं यज्ञोऽस्मि। युष्मासु सर्वेषु अहं शक्ति रूपेण निवसामि। देवान् एकैकशः स्वस्व शक्ति प्रकटयि तुम् कथितवान्। यत् यूयम् अस्मात् स्थानान् इदम् तृणम् अपसारयत। सर्वप्रथमम्भग्नि देवः तत्र आयातः। यक्षः तं तत् तृणं ज्वालयितुम् अवदत्। परं अग्नि देवः तत् तृणं ज्वालयितुम् समर्थः न अभवत्। अग्निः स्वकीयम् सम्पूर्ण बलं नियोजितवान् परं सः तृणस्य किमपि कर्तुम् ना शकत्। सः अग्नि पृष्ठेआगतः तदन्तरमवापु, इन्द्र, आदि सर्वे देवाः स्व–स्व शक्ति प्रदर्शनं अकुर्वन् परं सर्वे असफलाः अभवन्। अयं यक्षः कः ? इमां वार्ता मनसि निधाय सर्वे देवाः तस्य गवेषणायाम् प्रावर्तन्त। परं तम् गवेषितुं समर्थाः न अभवन्। केवलं इन्द्रः सफलं प्रयास अकरोत्। तेन् एका स्त्री दृष्टा। सा अत्यंन्त सौन्दर्य शालिनी, स्वर्णालंकारयुक्ता हिमवत् गौरवर्णा चासीत्। इन्द्रस्य पृष्ठे सा स्वनाम उमा इति अकथयत् उपनिषदा नुसारम् अस्य अर्थ वर्त्तते + रु अर्थात् किम्, म अर्थात् न। एवं उमा शब्दस्य अर्थ–सम्पन्नः किम् नास्ति। अर्थात् तर्कबुद्धिना इन्द्रेण साउमा पृष्टा अयं यक्षः कः आसीत्। उमा इन्द्रं बोधतिवती यत् मर्त्त पूर्वम् ब्रह्म एव यक्ष नाम्ना अभिधीयते स्मः। यः विजये महिमात्र भवदभिः अवलोकित तत्सर्व ब्रह्मण एव न युष्मांकम्। अग्निवायु इन्द्र इमें देवाः अनेभ्यो देवेभ्यः श्रेष्ठाः सन्ति। यतोहि एते एव

सर्वप्रथमं ब्रह्म व्यजानन्।

## गार्गी

वैदिक साहित्ये यदि कस्यापि देव्याः नाम भूयो भूयः श्रद्धया स्मर्यते तर्हि तन्नाम गार्गी। सा ब्रह्मवादिनी विदुषी गार्गी नाम्ना सुप्रसिद्धा वर्तते। तस्याः पितुः नाम वचक्नु आसीत्। वचक्नोः पुत्री सा आसीत् तस्मात् वाचक्नवी प्रोक्ता। गर्ग गोत्रे सा उत्पन्ना तस्माद् गार्गी नाम्ना प्रसिद्धा। बृहदारण्यकोपनिषादि याज्ञबल्केन सह तस्याः शास्त्रार्थस्य सुविस्तृतं वर्णनमुपलभ्यते। कथ्यते यत् विदेहो जनकः एकं सुविशालं यज्ञं कृतवान् तस्मिन् यज्ञे कुरू पाञ्चाल देशयोरनेके वैदिका विद्वांसः सम्मिलिता अभवन्। राजा जनकः विद्या व्यसनी, सत्संग प्रियाश्चासीत्। तस्मै स्त्राणां गूढ़तत्त्वविवेचनं परमार्थ वार्त्ताश्च अरोचन्त। अतस्तास्य मनसि विचारोऽयं समुदितः – को नुखलु अस्मिन् संसारे सर्वेषु ब्राह्मणेषु – शास्त्र चर्चायां प्रशस्यतम् इति ज्ञेयम्। परीक्षायै तेन नृपेण गोशालायां सुवर्णमण्डित श्रृंगाः एक सहस्र गावः बद्धाः। तदनन्तरं महीपतिः तत्र समवेतान् ब्राह्मणान् प्रोवाच – युष्मासु यः ब्रह्मविद्यायां सर्वश्रेष्ठः स्यात् तस्मै एताः सर्वाः सहस्र संखाकाः गावः समर्पयिष्यामः। राज्ञः इमां घोषणां श्रुत्वा कस्यापि ब्राह्मणस्य साहसो नाभवत् यत् सः आत्मानं ब्राह्मण श्रेष्ठ रूपेण प्रस्तोत्य ताः गावः स्वीकुर्यात्। तान् सर्वान् विप्रान् मौनान् विलोक्य याज्ञवल्क्यः मुनिः स्वं सामवेद निष्णातं शिष्यमाकार्य आदिदेश – सौम्य! त्वम् एताः सर्वाः गावः नय। ब्रह्मचारी तथैवानुष्ठितवान्। ततश्च सर्वे ब्राह्मणाः क्रुद्धाः अभवन्। राज्ञः जनकस्य होता अश्बलः याज्ञवल्क्यमवोचत् – मुने। कथं त्वमेव अस्मासु श्रेष्ठः ब्रह्मवेत्ता वर्तसे। याज्ञवल्कयः ब्रवीति नैव। वयंतु – ब्रह्मज्ञानिनं नमस्कुर्मः। वयं गावः इच्छामः। अतो नयामः। तदनु विदुषां ब्राह्मणानां शास्त्रार्थः प्रारब्धः। तत्रस्थिताः सर्वे ब्राह्मणाः प्रश्नान् अकार्षुः। तां प्रश्न श्रृंखलां श्रुत्वापि नृपो विचलितो नाभूत्। तेन शनैः – शनैः सर्वे प्रश्नाः उत्तरिताः। अनेकेषां विदुषां प्रश्नानाम् सप्रमाणानि उत्तराणि याज्ञवलकेन प्रदत्तानि। अन्ते वाचक्नवी गार्गी शास्त्रार्थ समरे कूर्दितवती। तया नैके प्रश्नाः पृष्टाः। आकाश, अन्तरिक्ष, गन्धर्व लोक, आदित्य लोक, चन्द्रलोक, नक्षत्रलोक, देवलोक, इन्द्रलोकादीन् अधिकृत्य कृतानां

तस्याः प्रश्नानां सुस्पष्टं समाधानं याज्ञवलकेन विहितं, परं यदा सा पृष्टवती ब्रह्मलोकः कस्मिन् ओतः प्रोतश्च। इमं प्रश्नं श्रुत्वा किञ्चित् कुपितः मुनिः प्राह – गार्गी। इयं प्रश्नानाम् अतिसी मा अस्ति। इदानीं त्वया प्रश्नाः न कर्त्तव्याः। यदि प्रश्नः करिष्यसि तर्हि ते मूर्धा भूमौ निपतिष्यति। गार्गी विदुषी आसीत् सा मुनेरभिप्रायं विदित्वा मौनमास्थिता। तदनन्तरं विदुषां प्रश्नानाम् उत्तराणि मुनिना प्रदत्तानि। गार्गी अपि पुनः प्रश्न द्वयं पृष्टवती। अनयोः द्वयोः प्रश्नयोः समाधानं मुनिः चकार। मुनिना अक्षर तत्त्वस्य सुविस्तृता समीक्षा प्रतिपादिता। याज्ञवल्कस्य वैदुष्येन गार्गी अतितरां प्रसन्ना अभवत्। सा निर्णितवती यत् जगत्यां नास्ति कोऽपि याज्ञवल्क्य समः विद्वान् न कोऽपि तं पराजयितुं क्षमते। सा ब्राह्मणान् कथितवती – याज्ञवल्क्यं नमस्कृत्यैव भवतां मुक्ति र्भवति। यदि भवन्तस्तं पराजेतुमिच्छथ तर्हि तद् व्यर्थमेव। गार्ग्याः प्रश्नान् श्रुत्वा तस्याः विद्वत्ताया अवबोधो जायते, पुनरपि सा स्वपक्षं दुराग्रहेण पोषयितुं नेच्छति। सा वैदुष्यमय मुत्तरं प्राप्य परां तुष्टिं संप्राप्ता। सा अन्येषां विद्वत्तां मुक्तकण्ठेन प्रशशंस। एवं गार्गी भारतस्य स्त्रीरत्नम् आसीत्।

## मैत्रेयी

महर्षेः याज्ञवल्कस्य द्वे भार्ये आस्ताम्। मैत्रेयी कात्यायनी च। अनयोः मैत्रेयी ब्रह्मवादिनी आसीत्। कात्यायनी सामान्य बुद्धिः आसीत्। मैत्रेयी ज्येष्ठा भार्या, कात्यायनी च कनिष्ठा आसीत्। एकदा याज्ञवल्क्यः स्वपत्नीम् आकारितवान्, मैत्रेयीं सम्बोध्य च प्रोक्तवान् – अहं सन्यासी व्रतं ग्रहीतुमिच्छामि । अतोऽहं गृहं त्यक्तवा अन्यत्र गमिष्यामि, मम गृहे यत्किञ्चिद् अर्थजातमस्ति तदहं युवयोः समान रूपेण विभज्य प्रदातुमिच्छामि। येन मम गृहं त्यक्तवा गते सति युवयोः न कोऽपि विवादो भवेत् इदं श्रुत्वा कात्यायनी मौनं स्थिता, परं मैत्रेयी कथितवती – भगवन्। यदि धन – धान्येन पूर्णा निखिला पृथ्वी मदीयाभवेत् तत् किमहम् अमृता भवेयम्। याज्ञवल्क्योऽब्रवीत्–नहि मैत्रेयी यथाऽन्ये धनवन्तो जनाः सुखं निवसन्ति तथैव ते जीवनं सुख परिपूर्णं भविष्यति, धनेन अमरत्वस्य आशा न विधेया। मैत्रेयी अगादीत्–येनाहं नामृता स्यां किमहं तेन कुर्याम्।

धनेन निरतिशयं यथार्थसुखं चेदलप्स्यत् भवान् एतत्सर्व परित्यज्य किमर्थं वनम गमिष्यः। भगवन् किम् भवान् ईदृशं वस्तुजातं वेत्ति यत् प्राप्य सर्वाणि सांसारिकाराणि सुखानि तृणवत् त्याज्यानि स्युः। अतोऽहमपि तदेव सुखं प्राप्तुमिच्छानि। तदेव च ज्ञातुमिच्छामि। यद्भवान् जानति तदेव ब्रूहि। यद् भवान् अमृतत्व साधनमवैति तदेव ज्ञापय। मैत्रेय्या इदं जिज्ञासा परिपूर्णं वचनं श्रुत्वा सर्वे प्रसन्नाः बभूवुः। याज्ञवल्क्योऽवोचत् मैत्रेयि। त्वं पूर्वमपि मम प्रिया आसीः। इदानीमपि तव मुखारविन्दात् प्रियं वचनमेव निःसृतम्। आयाहि मम समीपे उपविश। मम वचनानि सावधानेन चेतसा श्रृणु। किंत्वं जानासि ? भर्त्ता भार्यां, भार्या च भर्त्तारं कुतः स्निह्यति ? किं त्वया अस्य प्रेम्णः रहस्यं ज्ञातं, विचारितं। दम्पती अन्यस्य कृते परस्परं न स्निह्यतः अपितु आत्मनः कृते स्निह्यतः। भार्या भर्त्तुः कार्याणि साधयति अतः भार्या भर्त्तारं स्निह्यति। अनेनैव विधिना संसारे पिता–पुत्र, भ्राता–भगिनी, आदयो यावन्तः सम्बन्धाः सन्ति तेषु स्नेहस्य कारणम् आत्मनः स्वार्थमेव। आत्मार्थे एव सर्वाणि पदार्थानि प्रियाणि भवन्ति। अतः आत्मैष द्रष्टव्यः, श्रोतव्यः, मन्तव्यः, निदिध्यासितव्यश्च। तस्य आत्मनः दर्शनात् श्रवणात्, मननात्, निदिध्यासनाच्च सर्वं ज्ञातं भवति।

इदम् अमृतमयम् उपदेशं श्रुत्वा मैत्रेयी कृतकृत्या अभवत् याज्ञवल्क्यश्च विरक्तो भूत्वा संन्यासरूपं धारयित्वा वनं गतः।

## पञ्चमोऽध्यायः – उपनिषत्कालीनानां नारीणां विशिष्टदार्शनिका मान्यताः

उपनिषद् हि भारतवर्षस्य विचारशीलजगतोऽमूल्यरहस्यात्मकस्य तत्त्वावेक्षणस्य स्वरूपं भवति। अत्र भारतीयमनीषीणां धार्मिकप्रतिबर्तनस्य सोपानात्मकरूपमात्रेण अभिव्यक्तो विद्यते। धार्मिक परिवर्तनस्य स्वरूपं केवलं रहस्यात्मकसम्भवत्वेऽपि प्रज्ञात्मकं जायते। उपनिषत्सु अध्ययनस्य बहूत्थानाः सम्भवन्ति। तथा च प्रत्येक समये तेषामुत्थानानां धार्मिकान्दोलनमपि दृश्यते। अद्यारभ्यः प्रायशश्चतुर्शतमधिकद्विसहस्त्रवर्षेभ्यः प्राग् भगवद्गीता प्रथमतया उपनिषदीय–तत्त्व–सिद्धान्त–गीतारूपेण प्रतिष्ठिता संजाता। गीता तु दार्शनिकभावधाराया नवजीवनं प्रदायिनी तथा वास्तविकरहस्यात्मकधर्मस्य

मूलमन्त्रत्वेन प्रयासः कृतः, यः अग्रेऽपि रहस्यात्मक कार्यकलापानां मार्ग नितरां प्रकाशयिष्यते। अस्माकमुपनिषद्ज्ञानधारा स्व पूर्वजैः निर्मिता एका महती आध्यात्मिक सम्पत्तिरिति यत् रहस्यप्रज्ञायाञ्चान्तर्गते समन्वयस्य स्थापना उपनिषत्सु कृता विद्यते। उपन्षित्सु अस्माकं जीवनदर्शनं स्वपरम्परागतस्य विकासस्य स्वरूपं प्रदर्शयन् तत्वस्य तत् स्वरूपं निरूपणं कर्त्तुं समर्थो विद्यते। यत् अस्माकं वैज्ञानिक – दार्शनिक – धार्मिकाकांक्षानाश्च परितुष्टिं भवेत्। उपनिषद अस्माकं सम्मुखे सत्यस्य तत् सिद्धान्तं प्रस्तूयन्ते, यत् उपनिषत्सु मार्मिकदर्शनं स्वोपलब्धेरनितमो लक्ष्यो ज्ञायते। अस्माकम् अत्र वर्णनस्य बहुमार्गा उपलभ्यन्ते यथैव ताषां नदीनां गमनमार्गा भिन्नाः सत्वेऽपि महासागरे ता नद्यो मिलन्ति।

## षष्ठोऽध्यायः – वर्तमान काले वेदेषु पठितानां उपनिषत्सु पठितानां च नारीणां प्रासङ्गिकता

विगत अध्याय षट्कस्य विवेचनया स्पष्टतया ज्ञायते यत् वेद कालीन नार्यः उपनिषत्कालीन नार्यश्च अतीव उत्कट आदर्श धारिष्यः सम्पूर्ण शास्त्र अध्ययन नैपुण्य वत्यश्च आसन्। तत्र नारीणाम् एव महिमा सर्वाधिकतया वर्णिता। नारी समाजस्य, परिवारस्य, राष्ट्रस्य च आधार भूता अस्ति। संस्कृति रक्षिका नारी एव अस्ति। गृहस्थ जीवनस्य समग्र दायित्व निर्वाहे नार्या एव प्रमुखं स्थानं विद्यते। नारी युगपदेव कदाचित् पत्नी रूपं, कदाचित् पुत्री रूपं, कदाचित भगिनी रूपंच प्रकाशयति। बहुनामपि प्रकाराणाम् मूले नार्याः युगपदेव सहभागिता लभ्यते। वेदेषु परमात्मनं मातृ शब्देन कथयन्तः जनाः मातृ महत्तां प्रकटयति। ईश्वरस्य या आज्ञा वर्त्तते प्रार्थना वा वर्तते तय प्रथमतया मातृ रूपस्य स्मरणं बहुतरं विलोक्यते। यथा च उक्तम् –

"त्वमेव माता च पिता त्वमेव,
त्वमेव बन्धुश्च सखा त्वमेव
त्वमेव विद्या द्रविणं त्वमेव
त्वमेव सर्वं मम् देव–देव।"

अस्यां प्रार्थनायाम् ईश्वरः प्रथमतया मातृ रूपेण कथितः। अस्यायं अभिप्रायः विद्यते यत् परमात्ववत् नारी पालनं करोति, तथैव शिक्षाम् अपि प्रयच्छति। उक्तम् एव माता निर्माता भवति। कथनस्य अस्य अपमेवाभि प्रायः विद्यते यत् माता न केवलं शिष्यस्य शरीरमेव निर्माति, अपितु तद्बुद्धेः मनसश्च पूर्णं निर्माणं करोति। वर्तमान काले जनाः पुत्रं तु कामयन्ते परम् पुत्रीन न त चा इच्छन्ति। कदाचित् जनैः प्रागेव भ्रूण हत्या रूपेण पापकर्म क्रियते। परम वेदे उपदिष्टम् यथा पुत्राः, श्रेष्ठाः तथैव पुत्री अपि पुत्रवत् सुखं जनयति। प्राचीनकाले संतति रूपे उभयोः पुत्र–पुत्रयोः एवरूपं संरक्षितम् अस्ति। गृहस्ये पत्युः पत्न्याश्च पुत्री प्राप्त्यर्थं पुत्र प्राप्त्यर्थं च तुल्या एव इच्छा भवति स्मः।

गृहे मेधिनां कर्त्तव्यम् इदम् भवति यत् पुत्र पुत्रयोः संवर्धनं तुल्यरूपेण स्यात्। वेदकालीन नारीणां यद् उज्ज्वलं रूपम् आसीत्। शनैः शनैः सा उज्ज्वलता अज्ञानवशात् क्षीणतां गता। या नारी पूर्वकाले पूज्य पदवाच्या आसीत् सा एव नारी कर्मशः वर्तमाने काले भोग्याः जाता। सम्प्रति सा रमणीया नारी दुष्ट पुरुषाणां हस्तयो क्रीड़ा कन्दुकतां गता। सम्प्रति तेषां मनुष्याणां मनोरंजन साधन भूता जाता। एकस्मिन् काले नारीणां समस्ता अधिकाराः हृताः न केवलं नारी अधिकार हीनाः जाता अपितु इदमपि कथितं यत् नार्याः शरीरे नास्ति आत्मा। आत्महीनं नार्याः शरीरं भवति। सा पठने पाठने च अधिकारं न बहति। वेदादि शास्त्रेषु तस्याः नास्ति प्रवेशाधिकारः। शंकराचार्येण घोषणा अपि कृता। यत् "स्त्री शूद्रौ ना धीयताम्" अर्थात् स्त्री शुद्रयोः स्वाध्याये अधिकारो न वर्तते। यागादि शुभ कर्म करणाय नार्याः उपयोगिता न वर्तते। परं स्मृति ग्रन्थेषु नार्याः स्वरूपं प्रतिष्ठात्मकं वर्तते।

*****